ज्ञानप्रतियोगिताकाभावमात्रस्य तादृशप्रतियोगित्वज्ञान-दशायामपि सत्त्वादाह तादृशप्रतियोगित्वावगाहिज्ञानत्वे-नेति। तादृशनिश्चयत्वेनेत्यर्थः। तेन तादृशप्रतियोगित्व-सन्देहदशायां न योग्यताहानिः।

ननु एवं पक्षः साध्याभाववान् इत्यादिनिर्णयदशायामपि उक्तक्रमेण संशययोग्यता स्यात्। तथाच तत्रापि अनुमित्या-पत्तिः। अत आह साध्यविशिष्टेति। अभावमात्रात्मकस्य व्यतिरेकस्य विपक्षगामित्वशङ्कानिवर्त्तकत्वासम्भवात् व्यति-रेकस्य इत्यादिमूलासङ्गतिः। अतो व्याचष्टे विपक्षे हेतोर-भाव इति। ननु क्वचित् विपक्षे हेतोरभावग्रहेऽपि विपक्ष-वृत्तित्वशङ्कोत्पादात् विपक्षत्वावच्छेदेन हेत्वभावत्वं वाच्यम्। तच्च व्यतिरेकव्याप्तिपर्य्यवसितं न तु स्वात्मिकायां व्यतिरेक-व्याप्तौ उपयुज्यते इति मूलासङ्गतिः। अतो व्याचष्टे साध्या-भावहेत्वभावयोरिति। तथाच व्यतिरेकव्याप्तेः स्वस्मिन् अनुपयुक्तत्वेऽपि साध्यान्वयव्याप्तौ व्यभिचारशङ्कानिरासद्वारा उपयोगः भिन्नप्रकारकस्यापि ज्ञानस्य विरोधित्वोपगमादिति भावः।

केचित्तु व्यतिरेको यदि अभावमात्रं व्यतिरेकव्याप्ति वा उभयथापि तद्बुद्धे र्न विपक्षवृत्तित्वशङ्कानिवर्त्तकत्वं भिन्न-प्रकारकत्वात् अतो व्याख्यातं विपक्षे हेतोरभाव इति हेतो-र्विपक्षवृत्तित्वाभाव इति तदर्थः। व्यभिचारशङ्काया न व्यति-रेकव्याप्तिविरोधित्वं भिन्नप्रकारकत्वात्। अतस्तन्निरासद्वारा विपक्षवृत्तित्वाभावस्य सुतरां व्यतिरेकव्याप्तौ उपयोगो न सम्भ-वति। अतो व्याचष्टे साध्याभावहेत्वभावयोरितीत्याहुः। तच्चिन्त्यम्। अत्रेति शङ्का इयं नव्यनैयायिकानां न तु गुरूणां तैरनौपाधिकत्वस्य व्याप्तित्वस्वीकारात्। अतएव गुरूणां

व्याप्यतावच्छेदकप्रकारकज्ञानस्यैव अनुमितिहेतुतया प्रायशः साधनभेदेऽपि इत्याद्यग्रिमग्रन्थासङ्गतिरित्यपि परास्तमित्यपि ध्येयम्।

साध्येति। अत्र साध्याभावस्य अधिकरणत्वं निरवच्छिन्नं ग्राह्यम्। तेन कपिसंयोगादिसाध्यकस्य एतद्वृक्षत्वादे र्नासङ्ग्रहः। तदपि वा केवलान्वयिनां पथि प्रस्थाप्यं इत्यवधातव्यम्। व्याप्तिरिति प्रकारतया अनुमितिजनकतावच्छेदकमित्यर्थः। व्याप्तिर्व्याप्नोतिः शक्यं केवलान्वयिनि तु न व्याप्यव्यवहारोऽपीत्यपि कश्चित्।

लाघवादिति। पक्षधर्मिकसाध्याभाववदवृत्तिमत्तानिश्चयोत्तरानुमितित्वावच्छिन्नं प्रति तादृशनिश्चयत्वेन हेतुतायाम् अवच्छेदकलाघवादित्यर्थः। पक्षधर्मिकस्वव्यापकसाध्यसमानाधिकरणहेतुमत्तानिश्चयोत्तरानुमितित्वावच्छिन्नं प्रति तादृशहेतुमत्तानिश्चयत्वेन कारणतायान्तु पूर्वापेक्षया अवच्छेदकगौरवादिति भावः। साध्याभाववदवृत्तित्वावच्छिन्नप्रकारकनिश्चयत्वेन एकरूपेण धूमालोकादिनानालिङ्गकपरामर्शस्य तादृशनिश्चयोत्तरानुमितित्वावच्छिन्नं प्रति हेतुत्वम्। अतः साधनविशेषाप्रवेशप्रयुक्तलाघवमप्यस्ति इत्याह प्रायश इति।

साध्याभाववदवृत्तित्वं न साध्याभाववति सम्बन्धसामान्येन अवर्त्तमानत्वम्। तद्ग्रहेऽपि पक्षः साध्याभाववदसंयुक्तवान् साध्याभाववदसमेतवान् इत्यादिज्ञानादेव साध्यानुमितिरानुभविकत्वात्। एवञ्च भिन्नसम्बन्धेन हेतुतास्थले साध्याभाववदवृत्तित्वस्थलमस्माकं नाना इत्याशयेन प्रायश इत्युक्तम्। न च साध्याभाववदवृत्तित्वज्ञानस्य साधनविशेषमन्तर्भाव्य अहेतुत्वे वह्न्यभाववदसंयुक्तधूमवान् पर्वत इत्यादिपरामर्शस्य धूमवत्त्वाद्यंशे भ्रमत्वग्रहेऽपि पर्वतो वह्निमान् इत्यनुमितिः

स्यादिति वाच्यम्। इष्टत्वात् यादृशवस्तुविषयकत्वेन अनुमितिहेतुत्वं तदघटितभ्रमत्वग्रहस्यैव अनुमितिप्रतिकूलत्वात्। अन्यथा धूमसामान्यव्यापकवह्निसमानाधिकरणनीलधूमवान् पर्वत इत्यादिपरामर्शस्य नीलांशे भ्रमत्वग्रहदशायां तन्मतेऽपि तादृशपरामर्शात् अनुमित्यनुत्पत्तिप्रसङ्गात्।

यादृशी विषयिताव्यक्तिः अनुमितिजनकतावच्छेदिका तद्घटकपदार्थगर्भाप्रामाण्यज्ञानस्यैव उत्तेजकतया निरुक्ताप्रामाण्यज्ञानस्यापि अनुमितिविरोधित्वसम्भवाच्च मन्मतेऽपि साध्याभाववदवृत्तिधूमत्वावच्छिन्नविषयताया एव तादृशावृत्तित्वावच्छिन्नविषयतात्वादिति ध्येयम्। यद्यपि धूमलिङ्गकवह्न्यनुमितित्वावच्छिन्नं प्रति आलोकलिङ्गकानुमित्साया: प्रतिबन्धकतया तदभावदशायां वह्न्यभाववदवृत्तिमान् पर्वत इत्येवं निश्चयादपि धूमलिङ्गकवह्न्यनुमितिप्रसङ्गः।

पक्षधर्मिकसाध्याभाववदवृत्तिधूमवत्तानिश्चयोत्तरानुमितेरेव धूमलिङ्गकानुमितित्वेन तत्र तादृशानुमित्यनुत्पादस्य सर्वसिद्धत्वात्। तथाच तद्वारणाय पक्षधर्मिकसाध्याभाववदवृत्तिधूमादिमत्तानिश्चयत्वेन तादृशनिश्चयोत्तरानुमितित्वावच्छिन्नं प्रति हेतुत्वं वाच्यमिति। साध्याभाववदवृत्तित्वज्ञानस्य हेतुत्वमतेऽपि साधनभेदेन भिन्न एव कार्य्यकारणभावः तथापि तल्लिङ्गकानुमितौ तदन्यलिङ्गकानुमित्साया: कामिनीजिज्ञासादिवत् स्वातन्त्र्येण प्रतिबन्धकत्वे मानाभाव इति मतेनेयं पक्षता च गुरूणामिव नव्यानां नानुमितिहेतुः। यत्रालोकलिङ्गकेच्छासत्त्वेऽपि धूमालोकोभयपरामर्शदशायां धूमलिङ्गकानुमितेरुत्पादात् आलोकलिङ्गकपरामर्शाभावविशिष्टाया एव आलोकलिङ्गकानुमित्साया धूमलिङ्गकानुमितिविरोधित्वं वाच्यम्। तथाच पर्वतधर्मिकवह्न्यनुमितिसामान्यं प्रति

धूमालोकभस्मादिपरामर्शाभावविशिष्टधूमालोकभस्मादिप्रत्येकलिङ्गकानुमितित्वत्वेन प्रतिबन्धकत्वमेव रुम्यक् इति धूमलिङ्गकत्वस्य कार्य्यतानवच्छेदकत्वात् तदवच्छिन्नस्य आपादनमेव दुर्घटमिति। तच्चिन्त्यम्।

ननु व्यापकसामानाधिकरण्यव्याप्तेः प्रयोजकत्वे तत्र हेतोर्यादृशः सम्बन्धः प्रविष्टः तेन पक्षधर्मताज्ञानात् तत्र साध्यस्य यादृशसम्बन्धो निविष्टः तेनैव पक्षे साध्यस्यानुमितिः, तथैव हेतुत्वकल्पनात् त्वन्मते त्वनियमः स्यात् अत आह यत्सम्बन्धेति नातिप्रसङ्गः। नैकसम्बन्धेन निरुक्तव्याप्त्यादिग्रहात् अपरसम्बन्धेन साध्यानुमितिप्रसङ्गः। ननु यदि उक्तप्रकारिकैव व्याप्तिः तदा गगनादौ तत्प्रमातोऽपि व्याप्तिग्रहाधीनं फलं स्यात् इत्याशङ्काफलं यदि अनुमितिः तदा कारणान्तरविलम्बादेव न तत्सम्भव इत्याह आकाशादेरिति।

पक्षधर्मतेति। तत्र आकाशस्य तत्त्वेन पक्षधर्मत्वाग्रहेऽपि साध्याभाववदवृत्तित्वेन पक्षधर्मत्वग्रहसम्भवात् अयुक्तमेतत् साधनविशेषान्तर्भावेण व्याप्तिग्रहस्य हेतुतायाः साधनभेदेऽपि इत्यादिना परित्यक्तत्वादिति चिन्त्यम्। व्याप्यव्यवहारस्य फलत्वे तु आह निविशतामिति। तथाच साध्यसामानाधिकरण्यविशिष्टमेव तद्व्याप्यताव्यवहारौपयिकम्। अतो न गगनादौ वह्न्यादिव्याप्यताव्यवहार इति भावः। लाघवादवृत्तिमत्त्वं वेति। साध्याभाववति येन सम्बन्धेन अवृत्तित्वं तेनैव वृत्तिमत्त्वं बोध्यम्। तेन समवायादिना वृत्तिमति द्रव्यत्वादौ संयोगादिना न वह्न्यादिव्याप्यत्वव्यवहारः। अत्र एवं सति घटत्वादेः साध्यतायां पर्य्याप्तिसम्बन्धेन घटपटोभयत्वादे र्व्याप्यत्वं स्यात्। पूर्वकल्पे तु तादृशसम्बन्धेन साध्य-

सामानाधिकरण्यविरहादेव व्याप्यत्वासम्भवात् तस्मात् वाक्यार्थोऽनास्थायामिति तत्त्वम्।

भिन्नत्वादीत्यादिना साध्याभाववदवृत्तित्वात्यन्ताभावसङ्ग्रहः। व्यभिचारेति व्यभिचारधीविरोधितावच्छेदकधर्मघटितत्वेनेत्यर्थः। तेन व्यापकताधियो विरोधिताखण्डकस्य यदीत्याद्युत्तरग्रन्थस्य नासङ्गतिः। अनुगमनीयमिति। यद्यपि तादृशभिन्नत्वादिप्रकारकनिश्चयस्य स्वस्वोत्तरानुमितित्वावच्छिन्नं प्रत्येव हेतुत्वात् अननुगमेऽपि न क्षतिः, तथापि अत्यन्तान्योन्याभावगर्भमन्तर्भाव्य कारणताद्वयकल्पनामपेक्ष्य लाघवात् साध्यव्यभिचारधीविरोधिधीविषयप्रकारकपक्षधर्मतानिश्चयत्वेन तादृशानुमितित्वावच्छिन्नं प्रत्येकमेव कारणत्वं युक्तमित्याशयेनेदम्। तच्च तादृशज्ञानविषयत्वञ्च। नचैवमिति छेदः। वह्न्यभावेत्यादिविषयविरोधविरहादित्यन्तम् अविरोधित्वे हेतुः। स्वरूपेण धर्मान्तराविशेष्यत्वेन भासत इत्यन्वयः।

तदवच्छेदकत्वञ्चेति। तस्य वह्नित्वस्य अवच्छेदकत्वञ्चेत्यर्थः। निर्वह्नित्वबुद्धौ वह्नित्वावच्छिन्नप्रतियोगितात्वेन संसर्गतायां तेषामनुप्रवेशादिति भावः। तदवच्छेदकत्वत्वेति प्रतियोगितावच्छेदकत्वत्वेत्यर्थः। विषयविरोधविरहादिति समानप्रकारताकबुद्धेरेव प्रतिबन्धकत्वादिति भावः। विशिष्टस्य महानसीयत्वादिविशिष्टस्य। प्रकारान्तरेति हेतुमन्निष्ठाभावप्रतियोगितात्वावच्छेदेन यादृशधर्मावच्छेद्यत्वाभावः तादृशधर्मावच्छिन्नसामानाधिकरण्यं व्याप्तिरित्यनुसरणे चेत्यर्थः, न तु हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकतापर्य्याप्त्यधिकरणान्यत्वानुसरणे इत्यर्थः। तथा सति महानसीयवह्निमान् धूमात् इत्यादौ अतिव्याप्तेः, महानसीयत्ववह्नित्वोभयोरेव

साद्दप्तावच्छेदकत्वपर्य्याप्त्यधिकरणतया तदुभयभिन्नत्वेन महानसीयत्वविशिष्टवह्नित्वप्रकारेण धूमादिव्यापकताया दुर्धरत्वापत्तेः। महानसीयवह्नित्वावच्छिन्नाभावस्यापि वह्नित्वावच्छिन्नाभावतया तत्तद्वृत्तित्वज्ञानस्यापि व्यापकताज्ञानप्रतिबन्धकत्वापत्त्या वह्नित्वपर्य्याप्तावच्छेदकताकवह्निनिष्ठप्रतियोगिताकाभाववद्वृत्तित्वस्यैव व्यभिचारतया तज्ज्ञानस्य विषयविरोधसम्भवाच्चेति ध्येयम्।

यद्दा प्रकारान्तरानुसरणे इत्यस्य साध्यतावच्छेदकतदितरोभयानवच्छेद्या या हेतुमन्निष्ठाभावप्रतियोगिता तदनवच्छेदकत्वस्य निवेश इत्यर्थः। निर्वह्निवृत्तिर्धूम इत्यादिव्यभिचारज्ञाने वह्नित्वान्यधर्मानवच्छिन्नप्रतियोगिताकत्वेनैव प्रतियोगितायाः संसर्गतया भानसम्भवात् इति भावः। सुतरामिति विषयविरोधविरहादिति पूर्वेणान्वयः। धूमवन्निष्ठाभावप्रतियोगितात्वावच्छेदेन वह्नित्वावच्छेद्यत्वाभावबुद्धौ निरुक्तप्रतियोगिताधर्मिकवह्नित्वाद्यवच्छेद्यत्वग्रहस्यैव विरोधित्वादिति भावः।

केचित्तु प्रकारान्तरेति हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकतापर्य्याप्त्यधिकरणघटितान्यत्वाद्यनुसरण इत्यर्थः। सुतरामिति निर्वह्निवृत्तिर्धूम इत्यादिप्रतीतौ वह्नित्वान्यधर्मानवच्छिन्नप्रतियोगिताकत्वेनैव संसर्गतया वह्नित्वादौ अवच्छेदकतापर्य्याप्तेरप्रवेशादित्यभिप्राय इत्याहुः। तच्चिन्त्यम्। मणिमन्त्रादिन्यायः स्वातन्त्र्ये मानाभावादिति। इदमुपलक्षणम्। निरुक्तव्यभिचारधीविरोधिधीविषयत्वस्य साध्याभाववदवृत्तित्वविशिष्टहेतुकालीनत्वादौ अतिप्रसक्तत्वात्। यत्प्रकारकनिश्चयत्वेन व्यभिचारधीविरोधित्वं तत्प्रकारकपक्षधर्मतानिश्चयत्वेनैव हेतुत्वं वाच्यम्। नचेदं व्यापकसामानाधिकरण्येऽप्यस्ति। व्यभिचारबुद्धिं प्रति व्यापकतानिश्चयत्वेन विरो-

धित्वस्य आवश्यकतया व्यापकसामानाधिकरण्यनिश्चयत्वेनापि तथात्वे मानाभावादित्यपि द्रष्टव्यम्।

वस्तुतः साध्याभाववद्वृत्तित्वात्यन्ताभावबोधस्य अनुमिति-हेतुत्वं न तु साध्याभाववद्वृत्तिभिन्नत्वज्ञानस्य तथात्वम्। साध्या-भाववद्वृत्तित्ववतां धर्म्मिणां कारणतावच्छेदकेऽनुप्रवेशे गौर-वात्। अतएव साध्यवदन्यावृत्तित्वस्यापि ज्ञानं न हेतुः। साध्यवतां धर्म्मिणां प्रवेशेन साध्याभाववद्वृत्तित्वाभावापेक्षया गुरुत्वात् इत्यनुगम एव नोचित इति ध्येयम्। यत्र साध्या-भावाद्यनुपस्थितावपि व्यापकतागोचरज्ञानादेवानुमितिः तत्र व्यभिचारात् साध्याभाववदवृत्तित्वज्ञानस्य हेतुत्वं सम्भवत्येव। नेत्यत आह व्यापकतेति। क्लृप्तकारणं विना कार्य्योत्पत्त्य-सम्भवात् एतादृशस्थल एव मानाभाव इति भावः।

यत्तु ननु व्यापकसामानाधिकरण्यस्य गुरुत्वेऽपि लघो-र्व्यापकत्वधियः कारणतायां बाधकाभावात् केवलान्वयिखण्डनं दुर्घटमित्याशङ्क्य व्यापकतेत्यादि ग्रन्थावतरणम्। तत्तुच्छम्। व्यापकत्वस्य साधनभेदात् नानात्वेन तदपेक्षया साध्याभाव-वदवृत्तित्वे लाघवस्य प्रागेव दर्शितत्वेन सन्दर्भविरोधापत्तेः। व्यापकतावगाहिज्ञानस्य हेतुत्वे साधकाभावमुक्त्वा बाधक-मप्याह न वा यौक्तिकमिति। अयोगादिति यद्रूपावच्छिन्ने व्यापकतावच्छेदकत्वधीः तद्रूपावच्छिन्नप्रकारेणैव साध्यस्या-नुमितेस्त्वयापि वाच्यत्वादित्याशयः।

अत एवाह अन्यथेति। यद्रूपावच्छिन्ने व्यापकतावच्छेद-कत्वं गृह्णाति तद्रूपानच्छिन्नप्रकारेणापि साध्यस्यानुमितौ भाने इत्यर्थः। ननु तन्मात्रवृत्तिधर्म्मावच्छिन्नविशेष्यकव्यापकतावच्छेद-कत्वग्रहस्य स्वरूपतस्तद्रूपावच्छिन्नविधेयताकानुमितिहेतुत्वात् जातित्वेन व्यापकतावच्छेदकत्वग्रहात् न ज्ञानवान् इत्यनुमिति-

र्मिता जातित्वस्य ज्ञानत्वमात्रावृत्तित्वात्। किन्तु ज्ञानत्वं व्यापकतावच्छेदकम् इत्याकारकग्रहादेव इत्यत आह अनुभवत्वेति। अनुभवत्वव्यापकजातित्वं सत्तादौ गुणत्वव्याप्यजातित्वञ्च रूपत्वादौ अतिप्रसक्तम्। अतो जातित्वस्य ज्ञानत्वमात्रवृत्तित्वरक्षार्थं विशेषणद्वयम्। तथात्वग्रहे व्यापकतावच्छेदकत्वग्रहे तत्प्रसङ्गादिति ज्ञानवान् इत्यनुमितिप्रसङ्गादित्यर्थः।

यद्यपि स्वरूपतस्तद्धर्मविशेष्यकं व्यापकतावच्छेदकत्वज्ञानं स्वरूपतस्तद्धर्मावच्छिन्नविधेयकानुमितौ कारणं ज्ञानत्वत्वावच्छिन्नधर्मिकञ्च व्यापकतावच्छेदकत्वज्ञानं ज्ञानत्वत्वविशिष्टज्ञानत्वावच्छिन्नविधेयताकानुमितौ हेतुरित्युक्तौ न दोषः।

न च एवं ज्ञानत्वत्वेन व्यापकतानवच्छेदकत्वग्रहदशायामपि ज्ञानवान् इत्यनुमितिप्रसङ्गः स्वरूपतो ज्ञानत्वधर्मिकव्यापकतावच्छेदकत्वग्रहस्य तदानीमपि सम्भवादिति वाच्यम्। त्वन्मते निर्वह्निवृत्ति धूम इत्याकारकव्यभिचारधियः सत्त्वेऽपि वह्न्यभाववदवृत्तिमान् पर्वत इत्याकारकज्ञानदशायामिव अस्माकमपि उक्तज्ञानदशायाम् अनुमितेरिष्टत्वात्। ज्ञानत्वत्वावच्छिन्नधर्मिकव्यापकतानवच्छेदकत्वग्रहस्य तु ज्ञानत्वत्वविशिष्टज्ञानत्वावच्छिन्नविधेयताकानुमितावेव विरोधित्वसम्भवात् तथापि व्यापकताज्ञानस्य हेतुत्वे चैत्रीयज्ञानवान् महानसोयंवह्निमान् इत्याद्यनुमित्यनुपपत्तिः। चैत्रीयज्ञानत्वादेरखण्डत्वाभावेन स्वरूपतस्तद्विशेष्यकव्यापकतावच्छेदकत्वज्ञानासम्भवात् चैत्रीयज्ञानत्वत्वेन व्यापकतावच्छेदकत्वग्रहे चैत्रीयज्ञानत्ववत्वान् इत्येवानुमितिप्रसङ्गादिति ध्येयम्।

यादृशरूपावच्छिन्नाधिकरणतात्वे हेतुव्यापकतावच्छेदकत्वधीः तादृशरूपावच्छिन्नविधेयताकैव अनुमितिः फलम्।

अतो न कोऽपि दोषः । प्रतियोगिवैयधिकरण्यस्य व्यापकतायां निवेशमपेक्ष्य साध्याधिकरणतायास्तद्घटितहेतुव्यापकत्वस्य व्याप्तौ प्रवेशेन लाघवादित्यपि वदन्ति । एतेनेति एकरूपेण केवलान्वयित्वग्रहात् अन्यरूपेण अनुमित्युत्पत्तौ अतिप्रसङ्गेन इत्यर्थः । ननु गगनाभावत्वत्वादिना केवलान्वयित्वग्रहः शुद्धगगनाभावत्वादिप्रकारेण अनुमितौ हेतुर्वाच्यः । गगनाभावत्वत्वविशिष्टगगनाभावत्वप्रकारेण अनुमितौ गगनाभावत्वत्वाश्रयत्वप्रकारेणैव केवलान्वयित्वग्रहस्य हेतुत्वात् नैकदा अवच्छिन्नानवच्छिन्नगगनाभावत्वप्रकारताकानुमितिप्रसङ्ग इति यदि ब्रूयात् तदाप्याह सर्वजनेति ।

गृह्यमाणव्यतिरेकेति । तदानीं केवलान्वयित्वाग्रहसम्पत्तये अन्यथा तत एव तत्रानुमितिसम्भवादिति । ननु एवं प्रमेयत्वादेरभावाप्रतियोगित्वग्रहदशायां घटादौ तद्वैशिष्ट्यावगाह्यनुमिति र्न स्यात् कारणबाधात् अत आह प्रमेयत्वादेश्चेति । तथाच तदानीं प्रमेयत्वादिसाध्यकानुमितिरसिद्धैवेति भावः । ज्ञेयत्वादौ घटादिवृत्तित्वाग्रहदशायां सहचारग्रहासम्भवात् केवलान्वयित्वेन घटादिवृत्तित्वानुमानासम्भवादाह कथञ्चिदिति । तथाच तद्वृत्तियत्किञ्चिद्धर्मव्यापकत्वेन समं साध्यस्य सहचारो जात्यन्धत्वादाविव मूलत इति तद्वृत्तिधर्मत्वावच्छिन्नव्यापकत्वस्य हेतुत्वे तद्दोषतादवस्थ्यमतः कथञ्चिदित्युक्तम् ।

केचित्तु तद्वृत्तिधर्मव्यापकत्वं तन्मात्रवृत्तिधर्मव्यापकत्वम् अन्यथा केवलान्वय्यन्तरे घटादिवृत्तित्वाग्रहदशायां सहचारस्यलाभावात् तथाच हेतुग्रहदशायां साध्यस्यापि प्रायशो ग्रहसम्भवात् सिद्धसाधनम् । अतः कथञ्चिदित्युक्तम् । तथाच तद्वृत्तित्वाग्रहदशायामेव अनुमितिरिति भाव इत्याहुः । तद-

नुमितिः प्रमेयत्वसाध्यकानुमितिः। अत्रेदमवधेयम् व्यापक-सामानाधिकरण्यस्य हेतुत्वेऽपि वाच्यत्वस्य व्यतिरेकित्वभ्रम-दशायां तदभाववद्वृत्तित्वस्य ग्रहात् तत्साध्यकानुमितिसम्भ-वेन केवलान्वयिसाध्यकानुमितिखण्डनं दुर्घटं तार्किकैरन्यथा-ख्यात्यभ्युपगमात्।

न च वाच्यत्वादेः केवलान्वयित्वग्रहदशायां वाच्यत्वाभाव-वद्वृत्तित्वग्रहासम्भवात् तदानीं वाच्यत्वाद्यनुमित्यनुत्पाद एव केवलान्वयिखण्डनस्यार्थ इति वाच्यम्। भिन्नप्रकारकज्ञानस्य अविरोधितया साध्ये वृत्तिमदभावाप्रतियोगित्वरूपकेवला-न्वयित्वस्य ग्रहे सत्यपि प्रतियोगितासंसर्गेण अभावे साध्य-वत्त्वावगाहिनः साध्याभाववद्वृत्तिर्हेतुरित्याकारकज्ञानस्य उत्पत्तौ बाधकाभावात्। न च अभावे धर्मिणि साध्यताव-च्छेदकावच्छिन्नप्रतियोगित्वसंसर्गेण साध्यीयत्वाभावग्रहदशायां साध्याभाववद्वृत्तित्वग्रहासम्भवात् तदानीं वाच्यत्वाद्यनुमित्य-नुत्पाद एव केवलान्वयिखण्डनशब्दार्थ इति। साम्प्रतं अभा-वत्वसामानाधिकरण्येन तादृशाभावग्रहेऽपि अभावधर्मिकस्य तादृशप्रतियोगितासम्बन्धेन साध्यीयत्वग्रहस्य सम्भवात् अभा-वत्वावच्छेदेन तादृशसाध्यीयत्वाभावग्रहस्य च प्रमात्मकस्य दुर्घटत्वात् संयोगादिसम्बन्धेन वाच्यत्वाद्यभाव एव तादृश-साध्यीयत्वाभावस्य असत्त्वात्।

वस्तुतस्तु अभावत्वविषयताम् अनन्तर्भाव्य साध्यतावच्छेदका-वच्छिन्नप्रतियोगितासंसर्गेण यः साध्यीयस्तद्वदवृत्तित्वज्ञानमेव लाघवात् कारणम् इत्यभावत्वावच्छेदेन प्रतियोगितासम्बन्धेन साध्यीयत्वाभावभ्रमे सत्यपि तादृशज्ञानोत्पत्तौ बाधकाभावः धर्मितावच्छेदकविशेषान्तर्भावेणैव बाधबुद्धेर्विरोधित्वात्। यत्तु साध्यतावच्छेदकधर्मेण साध्यतावच्छेदकसम्बन्धेन च अवच्छिन्नं

यत् प्रतियोगित्वम् अखण्डं तत्सम्बन्धेन अभावे साध्यवैशि-ष्ट्यावगाहिन एव साध्याभाववदवृत्तित्वज्ञानस्य अनुमितिहेतुत्वं लाघवात् न तु साध्यतावच्छेदकधर्मावच्छेद्यत्वं प्रतियोगित्वञ्च विशेष्यविशेषणभावापन्नमवगाहमानस्य साध्याभाववदवृत्तित्व-ज्ञानस्य तथात्वं गौरवात्। तथाच स्वरूपसम्बन्धेन वाच्यत्वत्वाद्यवच्छिन्नप्रतियोगिताव्यक्तेरलीकतया तत्सम्बन्धेन अभावे वाच्यत्ववैशिष्ट्यावगाहिवाच्यत्वाद्यभाववदवृत्तिज्ञेयत्व-मित्याकारकज्ञानस्यापि अलीकत्वम्। असतः संसर्गस्यापि अन्यथाख्यातिनिरासादिमतः कारणस्यैव बाधात् केवला-न्वयिसाध्यकानुमानस्य खण्डनमिति.। तन्न। घटादिपक्षकवाच्य त्वाद्यनुमितेरानुभविकत्वे वाच्यत्वत्वाद्यवच्छिन्नत्वं प्रतियोगित्वे प्रतियोगित्वञ्च अभावांशे संसर्गमर्य्यादया विषयीकुर्वाण-स्यैव वाच्यत्वाभाववदवृत्तित्वज्ञानस्य अन्यथाख्यातिरूपस्य तत्र हेतुत्वसम्भवेन कारणबाधस्य असम्भवात्। साध्यादिभेदेन अनुमितिव्याप्तिज्ञानयोः कार्य्यकारणभावभेदात् वह्न्याद्यनु-मितौ वह्नित्वाद्यवच्छिन्नाखण्डप्रतियोगितासम्बन्धेन वह्नीया-भाववदवृत्तित्वज्ञानत्वेनैव हेतुतालाघवस्य वाच्यत्वादिसाध्यक-स्थले अकिञ्चित्करत्वात्। तस्मात् केवलान्वयिनो वाच्यत्वादेः साध्यविषयानुमित्यनुभवाभाव एव केवलान्वयिखण्डनपदार्थः। तदुक्तं दीधितिकारैः। ननु ज्ञेयत्वादिहेतुका तदनुमितिरानु-भविकीति। एतेन साध्यादिभेदेन व्याप्तिज्ञानानुमित्योः कार्य्य-कारणभावभेदात् वह्निविधेयकानुमितौ वह्न्यभाववदवृत्तित्व-ज्ञानस्य हेतुत्वेऽपि ज्ञेयत्वादिलिङ्गकवाच्यत्वादिसाध्यकानुमितौ ज्ञेयत्वादिव्यापकवाच्यत्वादिसामानाधिकरण्य.धियः कारणत्वे बाधकाभावः कार्य्यकारणभावान्तरापत्तिभिया तदुपेक्षणे द्रव्य-त्वादेरपि अनुमितिर्न स्यात्। द्रव्यत्वादिविधेयकानुमितिं प्रति

द्रव्यत्वाद्यभाव: वदवृत्तित्वज्ञानस्य कारणतान्तरकल्पनायां गौरवात् इत्यस्यापि सुवचत्वात् इत्यपि निरस्तम्। द्रव्यत्वादिविधेयकानुमितेरानुभविकत्वेन तत्र कारणान्तरकल्पनस्य प्रामाणिकत्वात्। वाच्यत्वादिविधेयकानुमितेस्तु निष्प्रामाणिकत्वात्। तत्र विशेषतोऽपि व्यापकसामानाधिकरण्यधियः कारणत्वस्य उन्मत्तमात्रकल्प्यत्वात्। अन्यथा निर्वह्निधर्मिकवह्निविधेयकानुमितिमपि अङ्गीकृत्य तत्रापि निर्वह्निधर्मिकवह्निव्याप्यधूमवत्तादिपरामर्शस्य हेतुतायाः कल्पनापत्तेरिति दिक्।

केवलान्वयिनं निरस्य केवलव्यतिरेकिणं निरस्यति एवमिति। गौरवादित्यस्य साध्याभाववदवृत्तित्वज्ञानापेक्षया इत्यादिः। ननु साध्यवदन्यावृत्तित्वज्ञानस्येव व्यतिरेकव्याप्तिग्रहस्यापि व्यभिचारधीविरोधित्वेन अनुमितिहेतुत्वं साधनीयम् अत आह व्यभिचारेति। अविरोधं व्युत्पादयति वह्न्यभावेति। वह्न्यभाववति धूमाभावो नास्तीति धीः अभावे धूमाभावप्रतियोगिकत्वावगाहिनी धूमाभावेऽपि वह्न्यभाववदवृत्त्यभावप्रतियोगित्वमवगाहते इति तस्या एव विरोधिविषयकत्वमात्रेण व्यतिरेकव्याप्तिग्रहे कदाचित् प्रतिबन्धकत्वमुचितम्।

वस्तुतस्तु तदप्ययुक्तं संसर्गविधया प्रतियोगित्वग्रहे प्रतियोगित्वाभावप्रकारिकाया व्यतिरेकव्याप्तिधियो विरोधित्वासम्भवात्। वह्न्यभाववति धूम इत्येवं व्यभिचारग्रहे तु व्यतिरेकव्याप्तिग्रहस्य विरो[illegible]त्वं सुदूरपराहतम्। वस्तुगत्या धूमाभावाभावात्मकस्य धूमस्य विषयत्वेऽपि धूमाभावाभावत्वेन अप्रकारत्वादित्यखण्डनार्थः। ननु व्यतिरेकव्याप्तिग्रहोत्तरं जायमानबुद्धेः प्रत्यक्षादिभिन्नानुभवत्वेन अनुमितित्वसिद्धौ अनायत्या व्यतिरेकव्याप्तिज्ञानस्य हेतुत्वं सेत्स्यतीति अतस्तत्रैव

बाधकमाह व्यतिरेकेत्यादि। तत्त्वेन अनुमितित्वेन। क्रमिकानुमितिव्यक्तिपूर्वपूर्वानुमितौ परमते स्वमतेऽपि प्रवृत्तिजनकानुमितौ च व्यभिचारात् हेत्वन्तरमाह कॢप्तेति। सामग्रीति क्वचित् व्यतिरेकव्याप्ते र्ज्ञानं हेतुरित्येवं कल्पनायाः फलीभूतज्ञानानुमितित्वानुभवाधीनत्वात् तस्य च प्रकृते अभावादिति भावः।

विजातीयेति धीरित्यनुषज्यते। वैजात्यम् अर्थापयामि नानुमिनोमि इत्यनुभवादेव सिद्धम्। व्यतिरेकव्याप्तिग्रहस्य जन्यतावच्छेदकत्वेनैव तत्सिद्धिः। प्रत्यक्षादिभिन्नानुभवत्वस्य तथात्वे गौरवादित्यपि वदन्ति। ननु एवं साध्याभाववदवृत्तित्वस्य व्यतिरेकव्याप्तेश्च युगपत् परामर्शे अनुमित्यर्थापत्त्योः सङ्करः स्यात् अत आह कॢप्तप्रमाणेति। तथाच प्रत्यक्षानुमित्यो र्युगपत् सामग्रीसमवधाने यथानुभवसिद्धं तदेकतरसामग्र्या अपरप्रतिबन्धकत्वं तथैव प्रकृतेऽपि वाच्यम्। यदि अपरैः ज्ञानद्वययौगपद्यस्य अङ्गीकारात् विजातीयज्ञानद्वयमेव तत्र उत्पद्यते इत्याशयः। नातः प्रतिबध्यप्रतिबन्धकभावान्तरकल्पनागौरवमपीति भावः।

अनुत्पादादिति। पक्षताजन्यत्वे हेतुः। सापि अर्थापत्तिरपि। लाघवादिति अन्वयपरामर्शसहितपक्षताजन्यत्वापेक्षया इत्यादिः। एवं पक्षताजन्यत्वमात्रस्य प्रयोजकत्वे समवायसम्बन्धावच्छिन्नस्यैव पक्षताजन्यत्वस्य प्रयोजकत्वोक्त्या पक्षताप्रत्यक्षस्य वारणसम्भवेऽपि वस्तुगतिमनुरुध्य समाधत्ते इच्छासत्त्वेऽपीति। देशान्तरेति इच्छाशून्यात्मनि तस्याः पक्षताया निरस्तत्वादिति। प्रमाणाभावेनेत्यादिः तथाच दृष्टान्तासिद्धिरिति भावः। ननु सिद्धिकालीनायाः प्रत्यक्षादिसामग्र्यास्तत्तद्व्यक्तित्वेन अनुमितौ प्रतिबन्धकत्वकल्पनापेक्षया

लाघवादेव सिद्ध्यभावरूपपक्षतायास्तद्धेतुत्वं सेत्स्यतीति।
अत आह साध्यादीति। आदिना सिषाधयिषोपग्रहः।
तथाच साध्यादिभेदादिव अनुमितित्वार्थापत्तित्वादि-
प्रकारकसिषाधयिषाया भेदादपि पक्षताभेदात् अनु-
मितित्वादिप्रकारकेच्छाविरहघटितपक्षताजन्यत्वं यदि प्रयो-
जकं तदा अर्थापत्तौ स्वरूपासिद्धिरर्थापत्तित्वादिप्रकारकेच्छा-
विरहघटितजन्यत्वस्य प्रयोजकत्वेऽपि अनुमितौ दृष्टान्तासिद्धि-
रिति भावः।

ननु प्रत्यक्षाद्यतिरिक्तसाध्यज्ञानत्वप्रकारकेच्छाविरह-
विशिष्टसिद्धित्वघटितधर्मावच्छिन्नाभावत्वेन निरुक्तपक्षताद्वय-
मनुगमय्य तज्जन्यत्वमेव अनुमितित्वे प्रयोजकं वाच्यम्। अतो
नोक्तदोष इत्यतः प्रयोजकत्वपदार्थं वितर्क्य दूषयति प्रयोजक-
त्वञ्चेति। वस्तुतोऽर्थापत्तित्वावच्छेदेन तत्सामानाधिकरण्येन
वा अनुमितित्वस्य साधने पक्षताजन्यत्वं प्रयोजकम्। आद्ये
साध्यादीति तथाच भागासिद्धिरिति। द्वितीये तु आह प्रयो-
जकञ्चेत्यादीति युक्तमुत्पश्यामः।

प्राञ्चस्तु साध्यादीत्यादिपदेन पक्षाद्युपग्रहः। तेन साध्य-
पक्षभेदात् पक्षताया नानात्वात् न तज्जन्यता अनुमितित्व-
प्रयोजिका समव्याप्तस्यैव प्रयोजकत्वस्थितेरित्याशयः। ननु
व्याप्यमात्रे प्रयोजकत्वमास्थेयं तत्तत्पक्षसाध्यकानुमितित्वे वा
तत्तत्पक्षसाध्यकपक्षताजन्यत्वं प्रयोजकं वाच्यम् इत्यत उक्तं
प्रयोजकत्वञ्चेतीत्याहुः। असम्भवादिति अनुमितित्वजाते-
र्नित्यत्वादिति भावः। इत्यादेरित्यादिपदेन व्यापकत्वमित्यादेः
सूचनम्। एतेन उक्तदिशा प्रयोजकत्वस्य निरस्तत्वेन व्याप्ति-
ज्ञानेत्यादिना पक्षधर्मताधीसङ्ग्रहः। अन्वयव्यतिरेकान्यतर-
व्याप्त्यवगाहिज्ञानजन्यत्वमित्यर्थः।

तेन न व्याप्त्यननुगमनिबन्धनः स्वरूपासिद्ध्यादिः। अर्थापयामीत्यनुभवस्य व्यतिरेकिपरामर्शप्रयोज्यानुमितित्वावगाहित्वमङ्गीकुर्वतां व्यतिरेकव्याप्तिस्थलेऽपि अनुमितिमेव चणविलम्बेन कल्पयतां सिद्धान्तिकानां मतमाह साध्याभावेत्यादि। साध्यव्याप्यत्वस्य वृत्तिमत्त्वगर्भत्वे गगनादौ व्यभिचारवारणार्थं धर्मपदम् अन्यथा तु उपरञ्जकं तद्बोध्यम्। जलादौ धूमव्यापकाभावप्रतियोगिजलत्वादिपरामर्शात् अप्रसिद्धस्य धूमाद्यभावस्य अर्थापत्तौ उक्तगत्यभावात् प्रसिद्धसाध्यकैव इत्युक्तम्। स एव केचिदित्यत्र अस्वरसः। समवायेनेति वर्त्तमानत्वादित्यन्वयिगुणवदिति। यद्यपि जातिसाध्यक एव संयोगेन घटादिहेतौ अप्रसिद्धिः सम्भवति तथापि सम्बन्धविशेषेण वृत्तिमत्त्वमात्राप्रसिद्धिनिबन्धनानुमानविलयप्रदर्शनाय गुणवदिति साध्यान्तरमित्युक्तम्। पूर्वत्र तु समवेतत्वापेक्षया जातित्वस्य गुरुतया तदवच्छिन्नाभावस्य अप्रसिद्ध्यापि विलयसम्भवादिति द्रष्टव्यम्।

उपदर्शयेति। तथाच तत्र जात्यादौ जलादिवृत्तित्वानुमानमेव प्रमात्मकव्याप्तिज्ञानादिति भावः। स्वाधिकरणेति। तथाच जात्यादिसामान्याभावस्य हेतुभूतगुणादिमद्वृत्तित्वात् नोक्तदोष इति भावः। ननु स्वाधिकरणावृत्तिसाध्याभावकत्वव्याप्तौ स्वाधिकरणवृत्तित्वं न सम्बन्धसामान्येन वक्तव्यम्। जातिमान् द्रव्यत्वात् इत्यादौ अव्याप्तेः द्रव्यत्ववति काले जात्यभावस्य कालिकसम्बन्धेन वृत्तेः। नापि विशेषणतया घटभिन्नं द्रव्यत्वात् इत्यादौ अतिव्याप्तेः। साध्याभावस्य घटत्वादेर्विशेषणतया वृत्तित्वविरहात् अभावीयस्वरूपसम्बन्धेन भावस्य वृत्तौ मानाभावात्। घटत्वाभावो घटे नास्ति इति बुद्धेः लृप्तसमवायेनैव सम्भवात्। न चाभावत्वप्रतीतेः प्रमात्वानुरोधेन

स्वमते अभावाभावस्य अतिरिक्तत्वात् न दोष इति वाच्यम्। तथापि घटत्वाभावस्य कालिकसम्बन्धावच्छिन्नाभावे साध्ये गगनत्वादिहेतौ अव्याप्तिप्रसङ्गात्। घटत्वाभावरूपस्य साध्याभावस्य विशेषणतया गगनवृत्तित्वात् अतएव न प्रकृत-साध्यवत्ताबोधविरोधिताघटकसम्बन्धेनापि अधिकरणवृत्तित्व-निवेशो युक्तः। कालिकसम्बन्धेन गगनवृत्तित्वाप्रसिद्ध्या कथितस्थल एव अव्याप्तितादवस्थ्यात् स्वत्वाभाववत्ताबुद्धिविरो-धिताघटकसमवायसम्बन्धेन जातिवृत्तित्वाप्रसिद्ध्या इदं सत्ता-शून्यं जातित्वात् इत्यादौ अव्याप्तेश्च।

किञ्च द्रव्यसामान्याभाववान् जातिसामान्याभाववान् वा घटसत्तान्यतरत्वात् इत्यादौ अतिव्याप्तिः। गगनाद्यात्मकस्य साध्याभावस्य हेत्वधिकरणावृत्तित्वात्। न च साध्याभावत्वाव-च्छेदेन स्वाधिकरणवृत्तित्वाभावो विवक्षितः। स्वाधिकरण-त्वावच्छेदेन साध्यवत्त्वलक्षणव्यापकसाध्यसामानाधिकरण्य-मपेक्ष्यापि गुरुत्वादिति चेन्न। उक्तास्वरसेनैव साध्याभावकत्वा-दीत्यादिपदस्य उपन्यस्तत्वात्। तेन साध्याधिकरणत्वसामान्या-भावस्य साध्यसमानाधिकरणसामान्याभावस्य वा लाभः। तथाच स्वाधिकरणावृत्तिसाध्याधिकरणता सामान्याभावकत्वं स्वाधिकरणावृत्तिसाध्यसमानाधिकरणसामान्याभावकत्वं वा पर्य्यवसितम्। तत्र स्वाधिकरणवृत्तित्व साध्यसामानाधिकरण्यं तदवच्छिन्नाभावश्च विशेषणताविशेषेणैव वाच्यम्। अतो न कश्चिद् दोषः। साध्याभाववदवृत्त्यधिकरणतावच्छेदकधर्मवत्त्वे तात्पर्य्यम् इत्यपि कश्चिदिति कृतं पल्लवितेन।

ननु एवं स्वत्वप्रवेशे हेतुभेदात् अनन्तकार्य्यकारणभावा-पत्तिः। अत आह स्वत्त्वेति। प्रागेव स्वव्यापकसाध्यसामा-नाधिकरण्यधियो हेतुत्वस्वीकारदशायामेव स्वहास्तित्वत्वादि-

त्यस्य भवद्भिरित्यादिः अस्माभिस्तु हेतुमनन्तर्भाव्य साध्याभाव-वदवृत्तित्वज्ञानस्यैव हेतुत्वं स्वीक्रियते इति भावः। एतेन स्वाधिकरणावृत्तीत्यादिक्रमेणैव व्याप्तेर्निर्वचनेन परास्तमित्यग्रेऽन्वयः। नीलरूपवान् नीलसमवेतत्वे सति गोत्वात् इत्यस्यैव सम्यक्त्वे साध्यसाधनकोटौ अभावप्रवेशो विफल इति चिन्तनीयम्।

विशिष्टस्य गोत्वस्य व्यभिचारित्वात् नीलगवादौ विशिष्ट-हेत्विति परमते। स्वमते तु विशिष्टगोत्वादेः केवलान्वयिनः पथि प्रस्थाप्यत्वमेव इत्याशयेनाह परस्परेति। विशेष्यविशेषणयोः प्रत्येकाधिकरणताद्वयमेव विशिष्टवत्त्वप्रतीतेर्विषयः। अतएव प्रत्येकाधिकरणत्वस्य अभावनिश्चयेऽपि न विशिष्टवत्त्व-बुद्धिरिति प्राचां मते विशिष्टनिरूपिताधिकरणत्वाप्रसिद्धौ आह परम्परेत्यादीत्यपि वदन्ति। परम्परा च अत्र स्वाश्रयाधिकरणत्वम् अवच्छेदकत्वाख्यस्वरूपसम्बन्धो वा बोध्यः। तत्रेति यत्र विशिष्टस्य व्याप्यत्वव्यवहारः तत्र विशेषणविशेष्यसम्बन्धस्यैव व्याप्यत्वग्रहादनुमितिरिति।

इति श्रीजगदीशतर्कालङ्कारकृता टीका समाप्ता।

---

# केवलान्वयिनि अनुमाने जागदीशीटीकाया वादार्थः।

अगृहीतान्वयव्यतिरेकिसाध्यकं केवलव्यतिरेकि इति लक्षणे केवलान्वयिनः संयोगाभावादेः व्यतिरेकित्वव्युदासाय व्यतिरेकित्वम् अवच्छिन्नवृत्तिकान्यव्यतिरेकप्रतियोगित्वं भेदप्रतियोगितावच्छेदकत्वं वा इत्युक्तम्। अत्र तादृशप्रतियोगितावच्छेदकं भेदप्रतियोगितावच्छेदकं वा यद्रूपं तेन व्यतिरेकित्वं वक्तव्यम्। अन्यथा विशिष्टाभावादिमादाय केवलान्वयिनोऽपि व्यतिरेकित्वापत्तिरिति बोध्यम्। न च पूर्वकल्पे व्यतिरेकिमात्राभावस्यैव कालिकेन अवच्छिन्नवृत्तिकत्वात् असम्भवापत्तिरिति वाच्यम्। व्यतिरेकिताघटकसम्बन्धेन स्वप्रतियोगिमत्ताबुद्धिविरोधिताघटकसम्बन्धेन अवच्छिन्नवृत्तिकं यत् तदन्यत्वस्य विवक्षितत्वात्। अथ संयोगादेः व्यतिरेकित्वानुपपत्तिः संयोगाभावादेर्द्रव्ये अवच्छिन्नवृत्तिकत्वादिति चेदित एव अस्वरसात् द्वितीयकल्प आदृत इति वदन्ति।

परे तु अवच्छिन्नवृत्तिकान्यपदेन निरवच्छिन्नवृत्तिकस्य विवक्षितत्वात् न संयोगादेर्व्यतिरेकित्वानुपपत्तिः। संयोगाभावादेर्गुणादौ निरवच्छिन्नवृत्तित्वात् अतएव गगनाभावस्य व्यतिरेकित्वापत्तिः। गगनस्य अवच्छिन्नवृत्तिकान्यत्वादिति पूर्वपक्षोऽपि निरस्तः। गगनस्य अवृत्तित्वेन निरवच्छिन्नवृत्तिकत्वाभावात्। न च संयोगादेः समवेतत्वादिना निरवच्छिन्नवृत्तित्वात् संयोगाभावादेरपि व्यतिरेकित्वापत्तिरिति वाच्यम्। व्यतिरेकिताघटकसम्बन्धेन स्वप्रतियोगिमत्ताबुद्धि-

विरोधिताघटकसम्बन्धावच्छिन्नवृत्तितावच्छेदकानुयोगितानिरूपितप्रतियोगितावच्छेदकं यत् तेन रूपेण व्यतिरेकित्वस्य विवक्षितत्वात्। न च एवं रीत्या पूर्वकल्पपरिष्कारे द्वितीयकल्पानुसरणं कथमिति वाच्यम्। वृत्त्यनियामकसम्बन्धेन व्यतिरेकितास्थले अव्याप्तिमाशङ्क्यैव तत्कल्पादरणादित्याहुः।

अथ द्वितीयकल्पे समवायादिना गगनादे र्व्यतिरेकित्वानुपपत्तिः तेन सम्बन्धेन गगनादिमत्ताप्रसिद्ध्या तेषां भेदप्रतियोगितानवच्छेदकत्वात् इति चेत् अत्र केचित् व्यतिरेकिताघटकसम्बन्धावच्छिन्नभेदप्रतियोगितावच्छेदकत्वशून्यत्वतत्सम्बन्धावच्छिन्नवृत्तित्वोभयाभावस्य विवक्षितत्वात् नानुपपत्तिरित्याहुः। वस्तुतस्तु प्रमाणविभजनप्रकरणे प्रमात्मकानुमितिकरणस्यैव लक्ष्यतया एव लक्ष्यता नास्ति इति यथाश्रुतमेव सम्यक्। न च परत्र गगनसाध्यकस्थले सहचाराप्रसिद्ध्याशङ्कनं विरुध्येत इति वाच्यम्। दशाविशेषे लक्ष्यतावादिनामाचार्य्याणां मत एव तदभिधानात्। मणिकृन्मते उक्तव्याख्याने सन्दर्भविरोधाभावात्। अतएव अनुमितिग्रन्थे उपाध्यायमते प्रमाणनिरूपणप्रस्तावे प्रमैव लक्ष्या इति दीधितिकृत उक्तम्। अतएव भट्टाचार्य्येण एतद्ग्रन्थे गृहीतव्याप्तिभेदात् भेदकल्पे प्रमामात्रस्य लक्ष्यत्वे अखण्डव्यक्तिरेव निवेश्या इत्युक्तमिति नव्याः।

व्यभिचारधीविरोधिज्ञानत्वादिनैव अन्वयसहचारव्यतिरेकसहचारज्ञानयो र्व्याप्तिधीहेतुत्वादिति वा। अथ वह्निर्धूमसमानाधिकरण इति ज्ञानसत्त्वेऽपि धूमाभाववद्वृत्ति-र्वह्निरिति ज्ञानोदयात् कथं व्यभिचारज्ञानविरोधित्वं सहचारज्ञानस्येति चेत् व्यभिचारज्ञानदशायां सहचारज्ञानाद् व्याप्ति-

ज्ञानवारणार्थं एकक्षणावच्छिन्नैकात्मवृत्तित्वरूपं व्यभिचार-ज्ञानस्य यत् सामानाधिकरण्यं तदभावविशिष्टज्ञानत्वेनैव सहचारज्ञानस्य व्याप्तिज्ञानजनकत्वम् आचार्य्यस्याङ्गीकृतम्। अत्र विरोधिपदस्यापि असामानाधिकरण्यार्थकत्वात् नानुपपत्तिरिति।

न च व्यभिचारज्ञानाभावदशायां घटादिज्ञानादपि व्याप्तिज्ञानं स्यादिति वाच्यम्। विशेषणीभूतसहचारज्ञानविरहेण व्याप्तिज्ञानासम्भवात्। न च व्यतिरेकसहचारग्रहमात्रात् कथं व्याप्तिग्रह इति वाच्यम्। तत्र अन्वयसहचारस्य अग्रहेऽपि तद्घटकप्रत्येकपदार्थानां विशकलितज्ञानाद् विशेषे विशेषणमितिरीत्या व्याप्तिग्रहसम्भवात्। प्रकृतव्याप्तिग्राहकज्ञानविषयसहचारत्वव्यापकान्वयसहचारत्वकत्वलक्षणे यथाश्रुतार्थे धूमादिनिष्ठवह्न्यादिव्याप्तेरपि कदाचित् व्यतिरेकसहचारग्रहेण ग्रहात् असम्भवोऽभिहितः। अथ वाच्यत्वादिसाध्यके व्यतिरेकसहचाराप्रसिद्धा कथमसम्भव इति। न च समूहालम्बनज्ञानविषयघटादिसहचारमादायैव असम्भवः सम्पादनीय इति वाच्यम्। यथाश्रुतार्थं परित्यज्य ज्ञानांशे स्वत्वनिवेशकल्पेऽपि तद्दोषस्य परं स्वयमाशङ्कितत्वेन तदादाय एतद्दोषसङ्गमनस्य कदाचित् व्यतिरेकसहचारग्रहेण ग्रहात् इति हेत्वभिधानस्य असङ्गत्यापत्तेरिति चेन्न। धूमादिनिष्ठवह्न्यादिव्याप्तेरिति विशेषोत्कीर्त्तनेन असम्भवपदस्य अव्याप्तिपरत्वात्। वस्तुतस्तु यत्र घटपटसहचारि ज्ञेयत्वाभावो वाच्यत्वाभावसमानाधिकरण इति भ्रमविषयत्वम्। घटादिसहचारविषयकतादृशभ्रमान्तरं ज्ञेयत्वे वाच्यत्वव्याप्तिज्ञानञ्च तत्र घटादिसहचारस्यापि प्रकृतव्याप्तिग्राहकज्ञानविषयसहचारत्वात् अन्वयसहचारत्वाभावाच्च व्यापकत्वभङ्गेन केवलान्वयिसाध्यादिस्थलेऽपि

लक्षणासम्भवतोऽसम्भवः सम्भवत्येव इति विभाव्यम्।

प्रकृतहेतुधर्मिकप्रकृतसाध्यव्याप्यवगाहीत्यादि अत्र व्यापकदिशि हेतुधर्मिकसाध्यसहचारविषयित्वम् इत्यस्य घटकीभूतहेतुपदम् हेतुतावच्छेदकावच्छिन्नार्थकम् अन्यथा संयोगाभाववान् संयोगात् इत्यादौ संयोगाभावाभावः संयोगाभावसमानाधिकरण इति व्यतिरेकसहचारग्रहाधीनव्याप्तिज्ञाने व्यतिरेकिण्यतिव्याप्तेः। हेतुतावच्छेदकप्रवेशे तु संयोगाभावाभावत्वेन धर्मिविषयासंयोगस्य भाने संयोगत्वेन अभानात् नातिप्रसङ्गः। न च प्रकृतपददानेऽपि संयोगाभावाभावसंयोगः संयोगाभावसमानाधिकरण इत्यस्य सङ्ग्रहो दुर्वारः। प्रकृतहेतुधर्मिकसाध्यसहचारावगाहितायास्तत्र सत्त्वादिति वाच्यम्। यज्ज्ञानेत्यादिना यज्ज्ञाननिष्ठविषयतायाः प्रयोजकतावच्छेदकरूपव्यापकत्वस्य साध्यान्वयसहचारावगाहितात्वे विवक्षणीयत्वात्। न च एवमपि असम्भवः साध्यसमानाधिकरणो हेतुः साध्यवदधिकरणम् अधिकरणवृत्तिर्हेतुरिति ज्ञानद्वयनिष्ठकारणत्वस्य लाघवेन तादृशनिरूप्यनिरूपकभावापन्नविषयत्वेन वाच्यतया यज्ज्ञाननिष्ठविषयताप्रयोजकतावच्छेदकरूपस्य साध्यवदधिकरणम् अधिकरणवृत्तिर्हेतुरिति ज्ञानीयावगाहितायां सत्त्वेन न तत्र अन्वयसहचारावगाहितात्वस्य असत्त्वेन तादृशरूपव्यापकत्वभङ्गादिति वाच्यम्। अन्वयसहचारज्ञानीयावगाहितावृत्तित्वविशिष्टतादृशरूपव्यापकत्वस्य विवक्षितत्वादिति ध्येयम्। इदन्तु चिन्त्यते व्यतिरेकसहचारावगाहितापदेन यदि साध्याभावधर्मिकहेत्वभावसामानाधिकरण्यावगाहित्वं परित्यज्य हेत्वभावसामानाधिकरण्यावगाहितानिरूपितसाध्याभावविशेष्यत्वं विवक्ष्यते तदा अन्वयसहचारावगाहितायां तादात्म्यसम्बन्धेन तादृशसाध्याभा-

त्वविशेष्यतात्मकव्यतिरेकसहचारावगाहिताव्यापकत्वासम्भवात् प्रकृतपदं व्यर्थमेव।

तत्र साध्यपदमपि साध्यतावच्छेदकावच्छिन्नपरम्। अन्यथा संयोगवान् संयोगाभावात् संयोगाभाववान् संयोगाभावाभावात् इत्यादौ यथायथं संयोगाभावः संयोगाभावाभावसमानाधिकरण इति संयोगाभावाभावः संयोगाभावाभावसमानाधिकरण इति व्यतिरेकसहचारग्रहाधीनव्याप्तिग्रहेऽतिव्याप्तिः। एवञ्च प्रकृतहेतुधर्मिकप्रकृतसाध्यव्याप्त्यवगाहीत्यत्र हेत्वंशे प्रकृतत्वानुक्तौ वह्निसमानाधिकरणधूमवद्वृत्तिद्रव्याभावसमानाधिकरणो वह्न्यभाव इति सहचारज्ञानजन्ये वह्निव्याप्यवह्निसमानाधिकरणधूमवद्वृत्तिद्रव्यमिति ज्ञाने वह्निसाध्यकधूमहेतुककेवलान्वयित्वापत्तिः। अतः प्रकृतेति हेतुतावच्छेदकावच्छिन्नार्थकम्। वह्निसमानाधिकरणधूमवद्वृत्तिद्रव्याभावो धूमाभावसमानाधिकरण इति ज्ञानाधीने वह्निसमानाधिकरणधूमवद्वृत्तिद्रव्यव्याप्यो धूम इति ज्ञाने तद्विशेष्यधूमे वा वह्निसाध्यकधूमहेतुककेवलान्वयित्वापत्तिः। अतः प्रकृतत्वं साध्यविशेषणम्। अथ प्रकृतहेतुधर्मिकसाध्यव्याप्त्यवगाहियज्ज्ञानजनकज्ञाने अवृत्तिसाध्यहेतुव्यतिरेकसहचारावगाहित्वमिति कृते नैव सामञ्जस्ये उक्तगुरुतरप्रयासानौचित्यमिति चेत्। अत्र केचित् प्रकृतव्याप्त्यवगाहि यज्ज्ञानजनकज्ञानविषयसहचारत्वव्यापकसाध्यान्वयसहचारत्वकत्वमिति दीधित्युक्तलक्षणस्य परिष्कारो जगदीशेन अवगाहितामन्तर्भाव्य कृतः। उक्तरूपस्य च अन्यविधत्वेन तद्व्याख्यानासम्भवेन तस्य लघुत्वेऽपि तदर्थो न कृतः। न च दीधितिकृतैव कथं नोक्तरीतिरादृता एकलक्षणस्य लक्षणान्तरादूषकत्वादित्याहुः।

परे तु वह्न्यभावो धूमाभावसमानाधिकरणो धूमो वह्नि-समानाधिकरणश्च इति ज्ञाने घटकालीनवह्न्यभावो धूमाभाव-समानाधिकरण इति ज्ञानीयव्यतिरेकसहचारावगाहित्वस्य अवर्त्तमानतया अन्वयव्यतिरेकिण्यतिव्याप्तिः। न च तथापि तादृशव्याप्त्यवगाहियज्ज्ञानजनकीभूतज्ञाने व्यतिरेकसहचारा-वगाहित्वाभाव इति वक्तव्यमिति वाच्यम्। तथा सति यत्र एकम् अन्वयसहचारज्ञानम् अपरञ्च व्यतिरेकसहचारज्ञानम् अनन्तरञ्च व्याप्तिज्ञानम् तादृशान्वयव्यतिरेकिस्थले अति-व्याप्तिः। तज्ज्ञानजनकीभूतान्वयसहचारज्ञाने व्यतिरेक-सहचारावगाहित्वाभावादिति। न च तादृशव्यतिरेकसह-चारावगाहितात्वं तादृशज्ञानवृत्तितानवच्छेदकम् इति विव-क्षया तद्वारणं सम्भवतीति वाच्यम्। विशेषवृत्तिपदार्थस्य वैशिष्ट्यावच्छेदेन अभावाननुगमेन अवगाहितात्वे तद्वृत्तिताव-च्छेदकत्वसत्त्वे व्यतिरेकसहचारावगाहितात्वे तदभावासत्त्वेन असम्भवापत्तेः। न च तादृशावगाहितासामान्ये तादृशज्ञाना-वृत्तित्वविवक्षणात् न यथोक्तदोष इति वाच्यम्। सामान्य-पदस्य व्यापकतार्थकतया लाघवानवकाशात्। न च तादृश-गुरुतरस्य अनिवेशादेव लाघवमिति वाच्यम्। अवच्छेदकत्व-ग्रन्थे केचित्तु इति मते लिखितस्य अन्यतरत्वस्य अखण्डस्य प्रामाणिकत्वे प्रत्युत एव लाघवात्। अन्यतरत्वस्य भेदरूपत्वे-ऽपि प्रतियोगिविनाकृतस्य अखण्डभेदस्य निवेशेऽपि गौरवा-भावाच्च इत्याहुः।

यत्र केवलान्वयिनि साध्याभावधर्मिकहेत्वभावसहचार-ग्रहोऽप्रसिद्धः तत्र अव्याप्तेरेव पूर्वकल्पत्यागबीजत्वमुक्तम्। न च परकल्पेऽपि जनकज्ञाननिष्ठान्वयसहचारावगाहित्वव्यति-रेकसहचारावगाहित्वयोरन्यतरस्योक्तस्थले अप्रसिद्ध्या उक्ताव्या-

प्रे रपरीहारादिति वाच्यम् केवलान्वयि विशेषे अनाहार्य्यस्य व्यतिरेकसहचारग्रहस्य अप्रसिद्धावपि आहार्य्यव्यतिरेकसहचारज्ञानस्य प्रसिद्धत्वात् तत्र व्यतिरेकसहचारावगाहितायाः प्रसिद्ध्या अन्यतरप्रसिद्धेः। न च अवगाहितायाम् इच्छाऽप्रयोज्यत्वमवश्यं निवेश्यम् अन्यथा व्यतिरेकसहचारांशे आहार्य्यात्मकं यत् समूहालम्बनज्ञानं तदधीनव्याप्तिज्ञानस्य तद्विषयहेतौ वा केवलान्वयितया तत्राव्याप्तिप्रसङ्गात्। एवञ्च कथमाहार्य्यावगाहितायाः ग्रहणमिति वाच्यम्। अन्यतरांशे अनाहार्य्यत्वनिवेशेऽपि अन्यतरत्वप्रतियोगिकोटिप्रविष्टावगाहितायां प्रयोजनविरहेण अनाहार्य्यीयत्वानिवेशात्।

पूर्वकल्पे स्वाश्रयानाहार्य्यज्ञानजन्यत्वसम्बन्धेन व्यतिरेकसहचारित्वाभावोऽपि निवेशयितुमशक्यः। वृत्त्यनियामकताहृशसम्बन्धस्य प्रतियोगितानवच्छेदकत्वात्। न च ताहृशसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकभेदवत्त्वसम्बन्धेन व्यतिरेकसहचारावगाहितावत्त्वस्य विवक्षणीयतया न तद्दोष इति वाच्यम्। तत्र ताहृशसम्बन्धेन ताहृशावगाहितावत्त्वाप्रसिद्ध्या ताहृशभेदस्य अप्रसिद्धे नोक्तप्रकारः साधुरिति चिन्त्यम्। प्रकृतानुमितिहेतुज्ञानविषयव्याप्तित्वव्यापकप्रकृतसाध्यान्वयव्याप्तित्वकत्वमिति लक्षणस्य प्रकृतहेतुमत्तानिश्चयोत्तरप्रकृतसाध्यकानुमितित्वघटितेत्यादिना तात्पर्य्यार्थो जगदीशेन कृतः।

नचात्र निश्चयदलं व्यर्थं हेतुप्रकारकज्ञानाव्यवहितोत्तरत्वादिकमेव उच्यतामिति वाच्यम्। तथा सति वह्न्यभावव्यापकीभूताभावप्रतियोगिधूमवान् पर्वतः अभावव्यापकवह्निसमानाधिकरणाभाववांश्च पर्वत इत्याकारकसमूहालम्बनो यः परामर्शः धूमत्वेन धूमहेतुककेवलव्यतिरेकी अभावत्वेन अभावहेतुककेवलान्वयी च तत्राव्याप्तेः। निश्चयत्वनिवेशे च तदुत्तरानु-

मितिनिष्ठजन्यताया व्यतिरेकव्याप्त्यंशे अभावरूपप्रकृतहेतु प्रकारकनिश्चयघटितरूपानवच्छिन्नत्वात् नाव्याप्तिः विशेषणांशे संशयाकारभानानभ्युपगमादित्याशयः। अत्र घटितपदं पर्य्याप्त्यनिवेशसूचनाय। पर्य्याप्तिनिवेशे व्याप्तिविषयित्वाक्षिप्त-तादृशरूपे कार्य्यतावच्छेदकताया अपर्य्याप्तत्वेन असम्भवापत्तेः। अथ परामर्शनिष्ठायास्तादृशकारणताया अवच्छेदकप्रकारिता-त्वस्य धूमादिनानापदार्थप्रकारितायां सत्त्वेन तत्र व्याप्तिप्रका-रितात्वस्य असत्त्वेन च असम्भवापत्तिरिति चेन्न। प्रकृतपक्ष-विषयित्वावच्छिन्नप्रकृतहेतुतावच्छेदकावच्छिन्नहेतुविषयित्वा-वच्छिन्नप्रकारितात्वस्य विवक्षितत्वादिति वदन्ति। तन्न। जलं निर्गन्धमित्यादिग्रन्थविरोधापत्तेः। हेतुतावच्छेदकप्रकारिताया हेतुतावच्छेदकावच्छिन्नहेतुविषयित्वावच्छिन्नत्वाभावात्।

वस्तुतस्तु परामर्शनिष्ठजनकता लक्षणे न निविष्टा किन्तु हेतुधर्मिकव्याप्तिज्ञानरूपकरणनिष्ठकारणतारूपजनकतैव प्रवि-ष्टा तथाच नोक्तापत्तिः। न च कारणतारूपकारणताया ज्ञान-त्वादिनैव अवच्छेदात् कथं व्याप्तिप्रकारितायास्तदवच्छेद-कत्वमिति वाच्यम्। प्राचां मते हेतुधर्मिकव्याप्तिज्ञानत्वेनैव करणत्वाभ्युपगमात्। न च तादृशज्ञानत्वेन करणत्वमते तादृशज्ञानाव्यवहितोत्तरत्वघटितरूपस्यैव कार्य्यतावच्छेदक-त्वेन प्रकृतहेतुमत्तेत्यादिरूपस्य अतथात्वेन तथा निवेशे असम्भव एव भवतीति वाच्यम्। करणव्यापारयोरेकधर्मावच्छिन्नं प्रत्येव जनकत्वमिति प्राचां मतेनैव तदभिधानात्। न च तथापि हेतुतावच्छेदकप्रकारिताया अपि तादृशजनकताव-च्छेदकत्वेन असम्भवस्तदवस्थ इति वाच्यम्। प्रकारितात्वेन तादृशजनकतावच्छेदकताया विवक्षितत्वात्। न च जलं निर्गन्धम् इत्यादिग्रन्थविरोध इति वाच्यम्। तत्र पृथिवीत्वा-

व्यभावानुमितौ पृथिवीत्वव्यापकाभावप्रतियोगित्वहेतुतावच्छेदकविशिष्टवत्तावच्छेदेनैव हेतुतया तादृशहेतुतावच्छेदकस्य व्याप्यन्तरधर्मितानवच्छेदकत्वेन तत्प्रकारतायाः प्रकारितात्वेनैव अवच्छेदकत्वेन तद्ग्रन्थविरोधाभावात्।

अत्र केचित् तादृशजनकतावच्छेदकीभूतप्रकारितात्वव्यापकं प्रकृतसाध्यव्यतिरेकव्याप्तिप्रकारितान्यत्वं तदनुमितिकरणत्वं केवलान्वय्यनुमानत्वम्। साध्यान्वयव्याप्तिप्रकारितात्वपदेन साध्यव्यतिरेकव्याप्तिप्रकारितान्यत्वस्य विवक्षितत्वात्। तादृशप्रकारितान्यत्वस्य च हेतुप्रकारितादौ सत्त्वेन अव्याप्त्यसम्भवात्। व्यतिरेकव्याप्तिप्रकारितायाञ्च असत्त्वेन अतिव्याप्त्यसम्भवात्। न च एवमुदच्चरत्वमिति वाच्यम्। तादृशसहचारत्वव्यापकप्रकृतव्याप्तिघटकसहचारत्वकत्वमिति लक्षणस्य पूर्वस्थितस्य जगदीशेन तत्रापि प्रकृतहेतुसाध्यकान्वयव्याप्त्यवगाहियज्ज्ञानजनकीभूतज्ञानवृत्तिविषयितात्वव्यापकं व्यतिरेकसहचारावगाहितान्यत्वं तज्ज्ञानविषयताविशिष्टप्रकृतहेतुत्वं केवलान्वयित्वम् इत्यर्थकृतत्वेन ग्रन्थकृतैव एकपदस्य अन्यार्थकत्वं स्वीकृतमिति वदन्ति।

नव्यास्तु प्रकृतसाध्यान्वयव्याप्तिविशिष्टपक्षविशिष्टबुद्धित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकप्रकारतायाः प्रकृतसाध्यान्वयव्याप्तिप्रकारत्वावच्छिन्नजनकतावच्छेदकप्रकारतायाश्च प्रकृतसाध्यान्वयव्याप्तिप्रकारतापदेन विवक्षितत्वात् न दोषः। अथवा मुख्यविशेष्यतानिरूपितप्रकारतानिरूपितधर्मितावच्छेदकतानात्मकतादृशजनकतावच्छेदकप्रकारतात्वव्यापकप्रकृतसाध्यान्वयव्याप्तिप्रकारतात्वस्य निवेशात् नानुपपत्तिलेशोऽपि। एतेन तादृशजनकतापदेन परामर्शनिष्ठजनकताया ग्रहणेनापि न क्षतिरिति विभावनीयम्।

दकत्वानिरूपकत्वस्य हेतुतावच्छेदकनिष्ठप्रकारताभिन्नत्वे सति अन्वयव्याप्तिप्रकारताभिन्नत्वे सति व्यतिरेकव्याप्तिप्रकारताभिन्ना या प्रकारता तदनिरूपितत्वस्य विवक्षितत्वात् अदोष इति वदन्ति।

अथ तथापि व्याप्तिविशिष्टहेतुमत्तानिश्चयोत्तरानुमितित्वघटितधर्मावच्छिन्नं प्रति व्याप्तिविशिष्टहेतुमत्तानिश्चयत्वेन हेतुत्वं न तु शुद्धहेतुप्रकारकनिश्चयोत्तरानुमितित्वावच्छिन्नं प्रति तादृशनिश्चयत्वेन। एवञ्च व्याप्तिविशिष्टहेतुप्रकारकनिश्चयत्वाघटकस्य हेतुप्रकारत्वान्यत्वस्य हेतुप्रकारत्वान्यप्रकारतानिरूपितत्वाभावस्य च अनुमितित्वावच्छिन्नजन्यतायाः परस्परावच्छेदकत्वाभावात् तत्र तत्र अवच्छेदकत्वघटितजन्यताया अप्रसिद्धत्वात् तत्र तत्र अवच्छेदकत्वघटितस्य निरुक्तलक्षणस्य असम्भवापत्तिरिति चेत् अत्र समाधानम्।

अत्रापि उक्तरीत्या हेतुतावच्छेदकावच्छिन्नप्रकारतानिष्ठावच्छेदकतानिरूपिता या अन्यनिष्ठावच्छेदकता तन्निरूपितप्रकारतानिष्ठावच्छेदकतानिरूपितनिरूपितत्वनिष्ठावच्छेदकतानिरूपिताभावनिष्ठावच्छेदकतानिरूपितपर्यन्तविशेष्यतानिष्ठावच्छेदकतानिरूपितजन्यतैव लक्षणे निवेशनीया। केवलान्वयिस्थले अन्वयव्याप्तिविशिष्टहेतुप्रकारतानिष्ठावच्छेदकतान्यत्वनिष्ठावच्छेदकतां प्रगृह्यैव लक्षणसमन्वयः। अन्वयव्यतिरेकिस्थले व्यतिरेकव्याप्तिविशिष्टहेतुप्रकारतानिष्ठावच्छेदकतां प्रगृह्यैव अतिव्याप्तिवारणमिति न कुत्रापि दोषः।

केचित्तु व्याप्तिविशिष्टहेतुप्रकारकनिश्चयोत्तरानुमितित्वावच्छिन्नजन्यतैव लक्षणघटिका इति न पूर्वपक्षावकाश इति वदन्ति। तन्न। अन्वयव्यतिरेकिस्थले अतिव्याप्त्यापत्तेः। व्याप्तिपदेन अन्वयव्याप्तिरेव वाच्या। अन्यथा केवलान्वयिनि

अव्याप्तेः अन्वयव्यतिरेकव्याप्तिनिष्ठानुगतव्याप्तित्वाभावात् उभयसाधारणं न सम्भवति । अन्वयव्यतिरेकस्थले च अन्वयव्याप्तिविशिष्टहेतुप्रकारकनिश्चयोत्तरानुमितित्वघटितधर्मावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकप्रकारतात्वस्य व्यतिरेकव्याप्तिप्रकारतायामसत्त्वात् अतिव्याप्ते र्दुर्वारकत्वात् ।

लिङ्गतावच्छेदकविशिष्टस्य लिङ्गस्य यज्ज्ञाने इतरव्यापकाभावप्रकारकत्वानवच्छिन्नं तादृशानुमितिजनकत्वं यज्ज्ञानीयेतरव्यापकाभावप्रतियोगित्वप्रकारत्वानवच्छिन्नलिङ्गतावच्छेदकावच्छिन्नविशेष्यता तादृशानुमितिजनकतावच्छेदिका तज्ज्ञानमेव केवलान्वयि । तेन जलं निर्गन्धं पृथिवीत्वव्यापकाभावप्रतियोगिमत्त्वात् इत्यादौ इतरव्यापकाभावप्रतियोगित्वप्रकारतात्वेन इतरव्यापकाभावप्रतियोगित्वप्रकारत्वानिरूपितमेव तादृशलिङ्गतावच्छेदकावच्छिन्नविशेष्यत्वम् । अतो गन्धाभावव्याप्यपृथिवीत्वव्यापकाभावप्रतियोगिमज्जलमिति ज्ञानस्य लिङ्गतावच्छेदकविशिष्टस्य लिङ्गस्य यज्ज्ञाननिष्ठेतरव्यापकाभावप्रतियोगित्वप्रकारत्वानवच्छिन्नतादृशानुमितिजनकत्वस्य असत्त्वेन केवलान्वयित्वहानिरित्यनेनैव जगदीशेन निष्कर्षः कृतः ।

ननु साध्यव्याप्यहेतुमान् साध्याभावव्यापकाभावप्रतियोगिमांश्च पक्ष इत्याकारकज्ञानीयेतरव्यापकाभावप्रतियोगित्वप्रकारत्वानिरूपितं यत् अन्वयव्याप्तिविशिष्टलिङ्गतावच्छेदकावच्छिन्नविशेष्यत्वं तस्य तादृशानुमितिजनकतावच्छेदकत्वेन अन्वयव्यतिरेकिणि अतिव्याप्तिरिति चेन्न । यज्ज्ञानीयलिङ्गतावच्छेदकावच्छिन्नविशेष्यत्वावच्छिन्नप्रकृतसाध्यकानुमितित्वघटितधर्मावच्छिन्नजन्यतानिरूपितजनकतासामा-

न्यम् इतरव्यापकाभावप्रतियोगित्वप्रकारत्वानवच्छिन्नं तज्ज्ञानमेव केवलान्वयि इत्यस्य विवक्षितत्वात्।

तथाच तादृशस्थलीयतादृशानुमितिजनकतासामान्यान्तर्गतं यत् व्यतिरेकव्याप्तिज्ञानीयजनकत्वं तस्य इतरव्यापकाभावप्रतियोगित्वप्रकारत्वावच्छिन्नत्वात् नातिव्याप्तिरिति। न च तथापि वह्न्यभावव्यापकीभूताभावप्रतियोगिमान् वह्निव्याप्यधूमवान् पर्वत इति असमूहालम्बनज्ञानमादाय अन्वयव्यतिरेकिणि अतिव्याप्तिः। तत्र प्रत्येकज्ञानीयजनकतासामान्यान्तर्गतम् अन्वयव्याप्तिज्ञानीयतादृशानुमितिजनकत्वम् तस्य इतरव्यापकाभावप्रतियोगित्वप्रकारत्वानवच्छिन्नत्वादिति वाच्यम्। यज्ज्ञानाव्यवहितोत्तरप्रकृतसाध्यकानुमितित्वघटितधर्मावच्छिन्नजन्यतानिरूपितलिङ्गतावच्छेदकावच्छिन्नविशेष्यत्वावच्छिन्नजनकतासामान्यम् इतरव्यापकाभावप्रतियोगित्वप्रकारत्वानवच्छिन्नं तज्ज्ञानमेव केवलान्वयि इत्यनेन विवक्षितत्वात्।

तथाच यज्ज्ञानपदेन तादृशोभयज्ञानस्य धर्त्तव्यत्वेन तदुत्तरानुमितिनिष्ठकार्य्यतानिरूपितकारणतासामान्यान्तर्गता या व्यतिरेकव्याप्तिज्ञानीयजनकता तस्या इतरव्यापकाभावप्रतियोगित्वप्रकारत्वावच्छिन्नत्वात् न तत्रातिव्याप्तिरिति। यज्ज्ञानपदेन तादृशानुमितिजनकतावच्छेदकतापर्य्याप्त्यधिकरणीभूतविषयताशालियज्ज्ञानाव्यवहितोत्तरत्वस्य विवक्षितत्वात् नोदासीनज्ञानादौ अतिव्याप्तिरिति ध्येयम्।

गुरुचरणास्तु यज्ज्ञाननिष्ठतादृशानुमितिजनकत्वं लिङ्गतावच्छेदकावच्छिन्नविषयतानिरूपिता या इतरव्यापकाभावप्रतियोगित्वप्रकारता तदवच्छिन्नजनकतानिरूपितजन्यताशून्यानुमितिनिष्ठजन्यतानिरूपितं तज्ज्ञानमेव केवलान्वयि।

न च लिङ्गतावच्छेदकावच्छिन्नविषयतानिरूपितत्वस्य इतरव्यापकाभावप्रतियोगित्वप्रकारतायां विशेषणं व्यर्थमिति वाच्यम्। जलं निर्गन्धं पृथिवीत्वव्यापकाभावप्रतियोगिमत्त्वात् इत्यादौ गन्धाभावान्वयव्याप्तिज्ञानस्य केवलान्वयितया तत्र अव्याप्त्यापत्तेः। तादृशव्याप्तिज्ञाननिष्ठजनकतायां गन्धाभावव्याप्यपृथिवीत्वव्यापकाभावप्रतियोगिमत् जलम् इति ज्ञानजन्यसमूहालम्बनानुमितौ इतरव्यापकाभावप्रतियोगित्वप्रकारत्वावच्छिन्नजनकतानिरूपितजन्यताशून्यत्वविरहेण तादृशप्रकारत्वावच्छिन्नजनकतानिरूपितजन्यताशून्यानुमितिनिष्ठजन्यतानिरूपितत्वाभावात्। अनयैव दिशा परलक्षणमपि परिष्कार्य्यम्।

इति पण्डितकुलपतिना वि, ए, उपाधिधारिणा श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण सङ्कलितः केवलान्वय्यनुमानस्य जागदीशीटीकावादार्थः समाप्तः।

---



पण्डितकुलपतिः

श्रीजीवानन्दविद्यासागर बि, ए,

PANDITA KULAPATI

JIBANANDA VIDYASAGARA, B. A.

*Superintendent, Free Sanskrit College, Calcutta.*